तन्निर्विकाररूपं सविशेषालम्बनाः कथंचिदपि ।
न प्राप्नुवन्ति यस्माद्भवन्त्यतत्क्रतव एव ते सर्वे ॥ १४३ ॥
तस्माद्यथा द्विरूपे परात्मनि हि निर्विशेषरूपमिदम् ।
अनवाप्य सगुण एव हि वर्तन्ते ते तथैव सगुणेऽपि ॥ १४४ ॥
परमेश्वरप्रसादात्सावग्रहमेव तदिदमैश्वर्यम् ।
लब्ध्वाऽनवाप्य निरवग्रहमैश्वर्यं किलावतिष्ठन्ते ॥ १४५ ॥

दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥

दर्शयतश्च विकारावर्तित्वं हि श्रुतिस्मृती तस्य ।
या च न तत्रेत्याद्या या च न तद्भासयत इति प्रथिता ॥ १४६ ॥

भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥

निरवग्रहमैश्वर्यं नैषां सविशेषतत्पराणां स्यात् ।
परमेश्वरेण यस्मात्तेषां किल भोगमात्रमेव समम् ॥ १४७ ॥
दर्शयतीह तमापो वै खल्वित्यादिका श्रुतिश्चेयम् ।
तं ब्रह्मलोकमागतमुपासकमिमं हिरण्यगर्भोऽयम् ॥ १४८ ॥
इत्याहामृतरूपा आपो भुज्यन्त इह मया किंच ।
लोकोऽसावमृतोदकलक्षण एवमिति सा निरूपयति ॥ १४९ ॥
अन्याऽपि किल यथैतामित्याम्नाता श्रुतिस्तदेतदिह ।
परमेश्वरेण तस्य च सायुज्यसलोकतादि दर्शयति ॥ १५० ॥
नन्विह सातिशयत्वादैश्वर्यस्यान्तवत्त्वमपि च स्यात् ।
एवं चेदावृत्तिस्तेषां पुनरत्र दुर्निवारैव ॥ १५१ ॥
इत्याक्षेपं सकलं निरस्य शास्त्रं हि परिसमापयितुम् ।
सूत्रं पठति तदेतद्भगवाञ्श्रीबादरायणाचार्यः ॥ १५२ ॥

अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥

सर्वज्ञत्वादस्य च भगवत्त्वं युक्तमेव सूत्रकृतः ।
सूत्रद्वारा शिष्याणामाचारे प्रवर्तनादस्य ॥ १५३ ॥
आचार्यत्वं युक्तं तथैव किल बादरायणेतिपदात् ।
पुनरस्य बदरिकाश्रमवासोक्त्या तत्र समवतीर्णस्य ॥ १५४ ॥
नारायणस्य परमेश्वरलोकगुरोः प्रसादसूचनतः ।
शास्त्रस्य तत्प्रणीतस्य च सूचितमिह किलानवद्यत्वम् ॥ १५५ ॥

नाडीरश्म्यन्वितमिह पन्थानं ह्यर्चिरादिपर्वाणम्।
अनुचिन्त्य देवयानं व्रजन्ति ये तेन देवयानेन ॥ १५६ ॥
शास्त्रोपदिष्टनानाविशेषणं ब्रह्मलोकसंज्ञमिमम्।
यश्च तृतीयस्यां दिवि पृथिवीलोकात्प्रदर्शितः श्रुत्या ॥ १५७ ॥
तस्मिँल्लोके र इति ण्यश्चेत्यव्याख्ययाऽतिविख्यातौ।
अर्णवतुल्यौ भवतः सुधाह्रदौ द्वौ तथैव चान्यदपि ॥ १५८ ॥
ऐरंमदीयमित्यपि सरश्च तन्मदकरं तथाऽन्नमयम्।
किंचाश्वत्थस्तत्रामृतवर्षी मुक्तलोकसंसेव्यः ॥ १५९ ॥
तत्राजितात्मभिः खल्वप्राप्या ब्रह्मणः पुरी काऽपि।
प्रभुणैव तेन विरचितमपि वेश्म हिरण्मयं च तत्रास्ति ॥ १६० ॥
मन्त्रार्थवादवाक्यैः पुराणवाक्यैः प्रपञ्चितो बहुधा।
तमिमं लोकं प्राप्य च तत्र स्वच्छन्दभोगकृतकृत्याः ॥ १६१ ॥
ते चन्द्रमण्डलादिव नाऽऽवर्तन्ते पुनः कदाचिदपि।
यस्मात्तयोर्ध्वमायन्नित्यादिश्रुतय उपदिशन्त्येवम् ॥ १६२ ॥
ये च शताधिकनाड्या व्रजन्ति यान्त्येव तेऽमृतत्वमिति।
श्रुतिरन्या तेषामिह न हि पुनरावृत्तिरिति किल ब्रूते ॥ १६३ ॥
एतेन देवयानेन पथा ये ब्रह्मलोकमुपयाताः।
मानवमावर्तं ते नाऽऽवर्तन्त इति दर्शयत्यन्या ॥ १६४ ॥
न च पुनरावर्तत इत्यन्याऽपि ब्रह्मलोकसंस्थानाम्।
पुनरावृत्तिविवर्जितमेव पदं शाश्वतं प्रदर्शयति ॥ १६५ ॥
अन्तवदेव हि यद्यप्यैश्वर्यमिदं प्रतीयतेऽथापि।
भवति यथाऽनावृत्तिस्तथोपवर्णितमिदं हि पूर्वत्र ॥ १६६ ॥
कार्यात्यय इति सूत्रे कार्यपदस्य च लये समुत्पन्ने।
उत्पन्नतत्त्वसाक्षात्कारास्तत्रैव तदधिनाथेन ॥ १६७ ॥
सह कैवल्यं प्रभुणा हिरण्यगर्भेण ते प्रयान्तीति।
साधनवीर्याद्ये पुनरत्रैवोत्पन्नतत्त्वविज्ञानाः ॥ १६८ ॥
विध्वस्तानाद्यज्ञानावरणा नित्यसिद्धपरिनिष्ठाः।
तेषां चानावृत्तिः सिद्धैवाऽऽवृत्तिकारणाभावात् ॥ १६९ ॥
सविशेषब्रह्मपराणामपि विदुषां तदाश्रयेणैव।
सेयमनावृत्तिः स्यान्न चान्यथा भवति तत्क्रतुन्यायात् ॥ १७० ॥
पञ्चाग्न्युपासकानां यद्यपि सविशेषनिष्ठता नास्ति।
श्रुत्या चानावृत्तिर्ब्रह्मप्राप्तिश्च दर्शिता तेषाम् ॥ १७१ ॥

सत्यं तथाऽपि तत्र च तेषामिह न पुनरिति समाम्नातम् ।
तेन त्वस्मिन्कल्पे तेषामावृत्त्यभावबोधेन ॥ १७२ ॥
कल्पान्तरे हि तेषामावृत्तिरियं पुनर्भवत्येव ।
दहराद्युपासकानामेवानावृत्तिपरमिदं सूत्रम् ॥ १७३ ॥
सूत्रपदाभ्यासः खल्वध्यायसमाप्तिमेव सूचयति ।
शास्त्रस्य परिसमाप्तिं सूत्राभ्यासोऽयमत्र सूचयति ॥ १७४ ॥
शारीरकमीमांसा मुनिना व्यासेन विरचिता सेयम् ।
चतुरध्यायी तस्यां चतुर्थसंज्ञश्च योऽयमध्यायः ॥ १७५ ॥
तत्र चतुर्थे पादे सूत्रार्थो यश्च भाष्यकारोक्तः ।
आर्यावृत्तैरमलैः प्रकाशितो भवतु सोऽयमनवद्यः ॥ १७६ ॥
भाष्यार्थरत्नमाला वैयासिकसूत्रजालसंग्रथिता ।
भगवति करुणासिन्धौ समर्पिता जयतु जगति निरवद्या ॥१७७॥
स जयति मुनिकुलमान्यो भगवाञ्श्रीबादरायणाचार्यः ।
यत्सूत्रालम्बनतो लोकः संसारसागरं तरति ॥ १७८ ॥
श्रीबादरायणोदितसूत्रार्थं भाष्यरत्नदीपेन ।
प्रकटी चकार योऽसौ स हि भगवाञ्जयति शंकराचार्यः ॥ १७९॥
भगवत्पादीयमिदं भाष्यं येनानभिज्ञदुर्बोधम् ।
बोधाय तेन तेषां रचिता भाष्यार्थरत्नमालेयम् ॥ १८० ॥
एतां विलोक्य सुधियस्तुष्यन्तु हसन्तु वाऽत्र न विषादः ।
सर्वज्ञविरचितेष्वपि महानिबन्धेषु येन तौ दृष्टौ ॥ १८१ ॥
तुष्यन्तु वा न वाऽन्ये भक्त्या परया समर्पितामेताम् ।
मालां विलोक्य कृपया तुष्यति भक्तार्तिभञ्जनो भगवान् ॥१८२॥
भाष्योपदिष्टमर्थं संगृह्य कृताऽपि भवति रम्येयम् ।
उपवनतरुसमुपचितैर्ग्रथिता कुसुमैः प्रसूनमालेव ॥ १८३ ॥
सेयं हि रत्नमाला सुब्रह्मण्येन विरचिता कृच्छ्रात् ।
नायकमणिसहकाराद्दिशि दिशि विशदं प्रकाशमुपयातु ॥१८४॥

इति श्रीभाष्यार्थरत्नमालायां चतुर्थाध्यायस्य
चतुर्थपादः समाप्तः ॥ ४ ॥

इति चतुर्थोऽध्यायः समाप्तः ।

---

समाप्तेयं भाष्यार्थरत्नमाला